# संस्कृतनिपुणता
# Level-02

Janaseva Trust Premises, Magadi Main Road,
Channenahalli, Bengaluru- 562130
Ph- +91 8431668084 , info@vvss.res.in www.vvss.res.in

# पुनःस्मरणम्

- श्लोकः – ०१
- पदच्छेदः
- आकाङ्क्षाक्रमेण अन्वयः
- पदपरिचयः
- समासपरिचयः
- प्रत्ययपरिचयः

## तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
## नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- व्याकरणविशेषः
  - तपःस्वाध्यायनिरतम् – तपः च स्वाध्यायः च – तपःस्वाध्यायौ। (द्वन्द्वः) तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः। (स.तत्पुरुषः) तम्।
  - तपस्वी – तपः अस्य अस्ति इति। तपस्+विन्।
  - वाग्विदाम् – वाचं वेत्ति इति। उपपदसमासः। क्विप्।
  - वरम् –
  - नारदम् –
  - परिपप्रच्छ – परि+प्रच्छ्+लिट्,
  - वाल्मीकिः – वल्मीके भवः। वल्मीक+इञ्
  - मुनिपुङ्गवम् – पुमान् च असौ गौः च – पुङ्गवः। (कर्मधारयः), मुनिषु पुङ्गवः।

# तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
# नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- व्याकरणविशेषः
  - तपःस्वाध्यायनिरतम् – तपः च स्वाध्यायः च – तपःस्वाध्यायौ। (द्वन्द्वः) तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः। (स.तत्पुरुषः) तम्।
  - तपस्वी – तपः अस्य अस्ति इति। तपस्+विन्।
  - वाग्विदाम् – वाचं वेत्ति इति। उपपदसमासः। क्विप्।
  - वरम् –
  - नारदम् –
  - परिपप्रच्छ – परि+प्रच्छ्+लिट्,
  - वाल्मीकिः – वल्मीके भवः। वल्मीक+इञ्
  - मुनिपुङ्गवम् – पुमान् च असौ गौः च – पुङ्गवः। (कर्मधारयः), मुनिषु पुङ्गवः।

# सप्तविधप्रत्ययाः

1. सनादिप्रत्ययाः - 12
2. विकरणप्रत्ययाः- 20
3. कृत्प्रत्ययाः - 124
4. तिङ्प्रत्ययाः - 18
5. सुप्प्रत्ययाः - 21
6. स्त्रीप्रत्ययाः - 10
7. तद्धितप्रत्ययाः - 275

---

संहतिः - 480

# कृत्प्रत्यया:

1. कृत्प्रत्यया: शताधिका: वर्तन्ते।

2. एतेऽपि धातुभ्य: भवन्ति।

दा+ तव्य

दातव्य

# कृत्प्रत्ययाः

केचन प्रसिद्धाः कृत्प्रत्ययाः इत्थं वर्तन्ते –

१) ण्वुल् २) ल्युट् ३) अनीयर् ४) क्त ५) क्तवतु ६) तव्यत् ७) तुमुन् ८) तृच् ९) क्त्वा १०) णमुल्

११) ल्यप् १२) यत् १३) ण्यत् १४) क्यप् १५) घञ् १६) अच् १७) अप् १८) क्तिन् १९) अ २०) युच्

२१) उ २२) शतृ २३) शानच् २४) अण् २५) क २६) णिनि २७) क्विप्

# सुप्प्रत्ययाः

सुप्प्रत्ययाः २१ वर्तन्ते।

ते च –
सु, औ, जस्, अम्, औट्, शस्, टा, भ्याम्, भिस्, ङे, भ्याम्, भ्यस्, ङसि, भ्याम्, भ्यस्, ङस्, ओस्, आम्, ङि, ओस्, सुप्।

एते प्रत्ययाः '**विभक्तिः**' इति पदेनापि व्यवह्रियन्ते।

# सुप्प्रत्ययाः

सुप्प्रत्ययानां सप्त विभागाः वर्तन्ते। तद्यथा -

| सुप्प्रत्ययाः | | | |
|---|---|---|---|
| | एकवचनम् | द्विवचनम् | बहुवचनम् |
| प्रथमा विभक्तिः | सु | औ | जस् |
| द्वितीया विभक्तिः | अम् | औट् | शस् |
| तृतीया विभक्तिः | टा | भ्याम् | भिस् |
| चतुर्थी विभक्तिः | ङे | भ्याम् | भ्यस् |
| पञ्चमी विभक्तिः | ङसि | भ्याम् | भ्यस् |
| षष्ठी विभक्तिः | ङस् | ओस् | आम् |
| सप्तमी विभक्तिः | ङि | ओस् | सुप् |

Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies

# सुप्प्रत्ययाः

- कृत्प्रत्यये तद्धितप्रत्यये स्त्रीप्रत्यये वा योजिते यत् रूपं भवति तत् प्रायः प्रातिपदिकम्।
- प्रातिपदिकात् सुप्प्रत्ययाः भवन्ति।

दा+ तव्य

दातव्य

दातव्य+अम्

दातव्यम्

# स्त्रीप्रत्ययाः

- स्त्रीत्वं बोधयितुम् क्रियमाणाः प्रत्ययाः **स्त्रीप्रत्ययाः**।
- एते दश सन्ति। ते च – टाप्, डाप्, चाप्, ङीप्, ङीष्, ङीन्, ऊङ्, ति, ष्यङ्, ष्फ इति।
- एते अपि प्रातिपदिकात् एव भवन्ति।

बालक + आ (टाप्)
बालिका

धातुः
सनादिप्रत्ययाः
प्रातिपदिकम्
(कर्त्री)
सनादिप्रत्ययाः
स्त्रीप्रत्ययाः
सुप्प्रत्ययाः
(कर्त्रीम्)
प्रातिपदिकम्
(कर्तृ)
सुप्प्रत्ययाः
सुबन्तम् (पदम्)
(कर्ता)
तद्धितप्रत्ययाः
कृत्प्रत्ययाः
सनादिप्रत्ययाः
धातुः
(कृ)
तिङ्प्रत्ययाः
तिङन्तम् (पदम्)
(करोति)
सनादिप्रत्ययाः
धातुः
(वसुदेवीय)
धातुः
(चिकीर्ष)
Veda Vijnana
Shodha Samsthanam
Centre for Śāstra and Contemporary Studies
धियो विश्वा विराजति।

पदम्

धातुः
प्रातिपदिकम्
सुबन्तम्

सनादिः
विकरणः
कृत्, तिङ्
सुप्, स्त्री
तद्धितः

पदम्

वाक्यम्

# तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
# नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- व्याकरणविशेषः
  - तपःस्वाध्यायनिरतम् – तपः च स्वाध्यायः च – तपःस्वाध्यायौ । (द्वन्द्वः) तपःस्वाध्याययोः निरतः – तपःस्वाध्यायनिरतः । (स.तत्पुरुषः) तम् ।
  - तपस्वी – तपः अस्य अस्ति इति । तपस्+विन् । अस्मायामेधास्रजो विनिः ५/२/१२१
  - वाग्विदाम् – वाचं वेत्ति इति । उपपदसमासः । क्विप् । सत्सूद्विष० ३/२/६१ ।
  - वरम् –
  - नारदम् –

# तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् |
# नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् || 1-1-1

- व्याकरणविशेषः
  - परिपप्रच्छ – परि+प्रच्छ्+लिट्,
  - वाल्मीकिः – वल्मीके भवः । वल्मीक+इञ्
  - मुनिपुङ्गवम् – पुमान् च असौ गौः च – पुङ्गवः । टच् । गोरतद्धितलुकि ५/४/९२ । कर्मधारयः । मुनिषु पुङ्गवः । सप्तमी तत्पुरुषः ।

## कोन्वस्मिन्साम्प्रतं लोके गुणवान्कश्च वीर्यवान् ।
## धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥1.1.2 ॥

- पदच्छेदः
- अन्वयः (आकाङ्क्षापद्धतिः)

साम्प्रतम् अस्मिन् लोके कः नु गुणवान् ? कः च वीर्यवान् ? कः धर्मज्ञः च कृतज्ञः सत्यवाक्यः दृढव्रतः च ।

- अन्वयार्थः

हे महर्षे, इदानीम् अस्मिन् जगति कः गुणयुक्तः ? पराक्रमी कः ? धर्मवत् कः ? कृतम् उपकारं यः स्मरति तादृशः कः ? सत्यस्य वक्ता कः ? दृढसङ्कल्पः कः ?

कोन्वस्मिन्साम्प्रतं लोके गुणवान्कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥1.1.2 ॥

सन्धिविच्छेदः -
कः नु अस्मिन् साम्प्रतं लोके गुणवान् कः च वीर्यवान् ।
धर्मज्ञः च कृतज्ञः च सत्यवाक्यः दृढव्रतः ॥1.1.2 ॥

| | अच् | | हश् | |
|---|---|---|---|---|
| | अ | आ, इ/ई<br>उ/ऊ, ऋ/ॠ,ऌ<br>ए, ऐ, ओ, औ | रेफः | ह् य् व् ल्<br>कवर्ग - ग् घ् ङ्<br>चवर्ग - ज् झ् ञ्<br>टवर्ग - ड् ढ् ण्<br>तवर्ग - द् ध् न्<br>पवर्ग - ब् भ् म् |
| अर् | उ | अर् | उ | उ |
| आर् | आर् | आर् | आर् | आर् |
| इर्/उर् इत्यादि स्वाभाविकः र् | - | - | आर्/ ईर्/ ऊर् | - |

|  | अ | इ | उ | ऋ | लृ | ए | ओ | ऐ | औ |
|---|---|---|---|---|---|---|---|---|---|
| अ | आ | ए | ओ | अर् | अल् | ऐ | औ | ऐ | औ |
| इ | य् | ई | य् | य् | य् | य् | य् | य् | य् |
| उ | व् | व् | ऊ | व् | व् | व् | व् | व् | व् |
| ऋ | र् | र् | र् | ॠ | ॠ | र् | र् | र् | र् |
| लृ | ल् | ल् | ल् | ॠ | ॠ | ल् | ल् | ल् | ल् |
| ए | अय् | अय् | अय् | अय् | अय् | अय् | अय् | अय् | अय् |
| ओ | अव् | अव् | अव् | अव् | अव् | अव् | अव् | अव् | अव् |
| ऐ | आय् | आय् | आय् | आय् | आय् | आय् | आय् | आय् | आय् |
| औ | आव् | आव् | आव् | आव् | आव् | आव् | आव् | आव् | आव् |

पदान्ते ए/ओ + अ = ए/ओ

# वर्णानाम् उच्चारणम्

अकुहविसर्जनीयानां - कण्ठः(स्निग्धतालु)
इचुयशानां तालु - तालु
ऋटुरषाणां मूर्धा - मूर्धा
लृतुलसानां दन्ताः - दन्ताः
उपूपध्मानीयानाम् - ओष्ठौ
ञमङणनानां - नासिका च
एदैतोः - कण्ठतालु
ओदौतोः - कण्ठोष्ठम्
वकारस्य - दन्तोष्ठम्
जिह्वामूलीयस्य - जिह्वामूलम्
नासिका - अनुस्वारः

| | खर् | | | |
|---|---|---|---|---|
| | क् ख् | प् फ् | च् ट् त्<br>छ् ठ् थ् | श् ष् स् |
| अः | ≍/ः | ≍/ः | स् | ः/स् |
| आः | | | | |
| इच्-ः | | | | |

# कोन्वस्मिन्साम्प्रतं लोके गुणवान्कश्च वीर्यवान् ।
# धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥1.1.2 ॥

- पदपरिचयः
  - कः - किम्, सर्वनाम, पुं, प्रथमा, एकवचनम्
  - नु - अव्ययम्
  - अस्मिन् – इदम्, सर्वनाम, पुं, सप्तमी, एकवचनम्
  - साम्प्रतम् - अव्ययम्
  - लोके – लोक, पुं, सप्तमी, एकवचनम्
  - गुणवान्, वीर्यवान् – गुणवत्, वीर्यवत् - पुं, प्रथमा, एकवचनम्
  - धर्मज्ञः, कृतज्ञः, सत्यवाक्यः, दृढव्रतः – धर्मज्ञ, कृतज्ञ, सत्यवाक्य, दृढव्रत – पुं, प्रथमा, एकवचनम्
  - च - अव्ययम्